7-7

भारती-संस्कृत-विद्या-निकेतनस्य ग्रन्थमालायाः
तृतीयं पुष्पम्

आदि शङ्कराचार्यविरचितम्

# अम्बाष्टक-स्तोत्रम्

Adi Sankaracharya's

# AMBASHTAKA-STOTRAM

व्याख्याता

Commentator

द्वादशदर्शनकाननकेसरी आचार्यः स्वामी काशिकानन्दगिरिजी महाराजः, महामण्डलेश्वरः

Dvadashadarshanakananakesari Acharya Swami Kashikanandagiriji Maharaj, Mahamandleswar.

आँग्लभाषानुवादकर्त्री

डॉ. उषा भिसे

English-rendering by

Dr. Usha Bhise

भारती-संस्कृत-विद्या-निकेतनम्

Bharati-Samskrta-Vidya-Niketanam

भारती-संस्कृत-विद्या-निकेतनस्य ग्रन्थमालायाः
तृतीयं पुष्पम्

आदि शङ्कराचार्यविरचितम्

# अम्बाष्टक-स्तोत्रम्

Adi Sankaracharya's

# AMBASHTAKA-STOTRAM

व्याख्याता

Commentator

द्वादशदर्शनकाननकेसरी आचार्यः स्वामी काशिकानन्दगिरिजी महाराजः, महामण्डलेश्वरः

Dvadashadarshanakananakesari Acharya Swami Kashikanandagiriji Maharaj, Mahamandleswar.

आँग्लभाषानुवादकर्त्री

डॉ. उषा भिसे

English-rendering by

Dr. Usha Bhise

भारती-संस्कृत-विद्या-निकेतनम्

Bharati-Samskrta-Vidya-Niketanam

प्रकाशकः

डॉ. अ. सदानन्दन्

भारती-संस्कृत-विद्या-निकेतनम्

१२, शङ्करकुञ्जः, हिमालय — सोसायटी — समीपम्,
असल्फा-गोविन्दनगरम्, घाटकोपरः, मुम्बापुरी - ४०० ०८४

Publisher

Dr. A. Sadanandan

Bharati-Samskrta-Vidya-Niketanam

12, Shankar Kunj, Near Himalaya Hsg. Society,
Asalfa-Govind Nagar, Ghatkopar,Bombay 400084

प्रथमावृत्तिः २००० प्रतयः, अक्टूबर १९९१.

First Edition 2000 copies, October 1991.

मूल्यम् :- रू. ८ /-

Price :- Rs. 8 /-

Printed by

Bhavan's Associated Advertisers & Printers,
Tardeo, Bombay-400 034.

# प्रस्तावना

भारती-संस्कृत-विद्या-निकेतनस्य ग्रन्थमालायाः प्रारम्भः महिषासुरमर्दिनीस्तोत्रेण सञ्जातः। अनुपदमेव द्वितीयपुष्पस्य अद्वैतविजयवैजयन्त्याः प्रकाशनम् कृतम् । एतस्य पुष्पयुग्मस्य प्रकटनानन्तरम् अधुना श्रीशङ्कराचार्यप्रणीतम् अम्बाष्टकम् वाचकवृन्दस्य पुरतः सहर्षम् स्थाप्यते। आद्यगुरूणाम् भाषासौष्ठवम् नैकवारम् भिन्नस्तोत्रद्वारा प्रकटितम् विद्यते। वर्णरचनाऽपि गानगुणसंयुता वर्तते। न केवलं गानगुणः किन्तु आशयस्य गभीरता, अर्थगौरवः इत्यादयः बहवः गुणाः तत्र संमीलिताः। तस्मिन् भक्तिरसस्य उत्कटता दृश्यते तथा वेदान्तदर्शनस्य तत्त्वविचारः अपि आधारभूतः इति स्फुटं लक्ष्यते । अम्बाष्टकस्तोत्रे कतिपयानि स्थानानि एवं विरचितानि यत् तेभ्यः द्वित्राः अर्थाः अवगन्तुं शक्यते । एवं च श्लेषानुप्रासाद्यलङ्कारप्रचुरम् इदं काव्यं भाष्यं विना सम्यक् ज्ञातुं न पार्यते । एवंविधस्य काव्यस्य भाष्यकारः अपि विविधशास्त्रदर्शनादिषु प्रवीणः भवितुं अर्हति । प्रस्तुतप्रकाशने महामण्डलेश्वरः द्वादशदर्शनकाननकेसरी आचार्यः स्वामी काशिकानन्दगिरिः महाराजः इत्येतेषां भाष्यं सर्वथा काव्यगुणानुकारि वर्तते । शब्दरचनागतालङ्कारादिकं तद्गताशयश्च सरलतया तथापि अर्थगौरवसहितं प्रकटितः । एवं च काव्यस्य इदं व्याख्यानं तस्य आशयः साकल्येन विशदीकरोति । प्रतिश्लोकं भाष्यानन्तरं राष्ट्रभाषानुवादः, आङ्ग्लभाषानुवादः चापि समाविष्टौ

याभ्यां ग्रन्थस्य उपयोगिता अतितराम् उपचिता ।

बेङ्गलूरुनगरे आगामि-नवम्बरमासे यः संस्कृतसप्ताहः संकल्पितः तस्मिन् अम्बाष्टकम् अधिकृत्य स्वामिचरणानां प्रवचनानि भविष्यन्ति । प्रवचनसमये श्रोतृवृन्दः अस्य पुस्तकस्य साहाय्येन स्तोत्रं सम्यक्तया बोधितुं पारयिष्यते । पाठशुद्धिं विधाय प्रकाशितम् इदं स्तोत्रं पारायणार्थम् अपि प्रशस्तं भवेत् ।

कालानुरूपं सङ्गणकमाध्यमेन अस्य ग्रन्थस्य प्रकाशनं सुकरम् अभूत् । सङ्गणकशास्त्रे प्रशिक्षिता अस्माकं संस्थापक-सदस्या श्रीमती निरञ्जना देसाई महोदया प्रकाशनकार्ये बहुमूल्यं साहाय्यं कृतवती । तस्याः परिश्रमेणैव प्रस्तुतग्रन्थमालायाः सर्वाणि पुष्पाणि सुकरतया त्वरया च प्रकाशतां नेतुं शक्ताः वयम् । तस्यै शतशः धन्यवादान् प्रकटयामः ।

संस्कृतपरिवारे इदं सभाष्यम् अष्टकं संतोषाय भवतु संस्कृतवाङ्मये च रसिकानां प्रीतिं वर्धयतु इति प्रार्थनां विधाय विरम्यते ।

डॉ. उषा भिसे

१५ अक्टूबर १९९१ अध्यक्षा, भारती-संस्कृत-विद्या-निकेतनम्

आदि-शङ्कराचार्यविरचितम्

# अम्बाष्टक-स्तोत्रम्

Adi Sankaracharya's

# AMBASHTAKA-STOTRAM

चेटीभवन्निखिलखेटी कदम्बतरुवाटीषु नाकिपटली-
कोटीरचारुतरकोटीमणीकिरणकोटीकरम्बितपदा ।
पाटीरगन्धकुचशाटी कवित्वपरिपाटीमगाधिपसुता
घोटीकुलादधिकधाटीमुदारमुखवीटीरसेन तनुताम् ।।१।।



कूलातिगामिभयतूलावलिज्वलनकीला निजस्तुतिविधा-
कोलाहलक्षपितकालाऽमरी कुशलकीलालपोषणनभाः ।
स्थूला कुचे जलदनीला कचे कलितलीला कदम्बविपिने
शूलायुधप्रणतिशीला विभातु हृदि शैलाधिराजतनया ।।२।।

यत्राशयो लगति तत्रागजा वसतु कुत्रापि निस्तुलशुका
सुत्रामकालमुखसत्राशनप्रकरसुत्राणकारिचरणा ।
छत्राऽनिलातिरयपत्राऽभिरामगुणमित्राऽमरीसमवधूः
कुत्रासहन्मणिविचित्राकृतिः स्फुरितपुत्रादिदाननिपुणा ।।३।।



द्वैपायनप्रभृतिशापायुधत्रिदिवसोपानधूलिचरणा
पापापहस्वमनुजापानुलीनजनतापापनोदनिपुणा ।
नीपालया सुरभिधूपालका दुरितकूपादुदञ्चयतु मां
रूपाधिका शिखरिभूपालवंशमणिदीपायिता भगवती ।।४।।



याऽऽलीभिरात्मतनुताली सकृत् प्रियकपालीषु खेलति भय
व्यालीनकुल्यसितचूलीभरा चरणधूलीलसन्मुनिवरा ।
बालीभृति श्रवसि तालीदलं वहति याऽलीकशोभितिलका
साऽलीकरोतु मम काली मनः स्वपदनालीकसेवनविधौ ।।५।।

न्यङ्काकरे वपुषि कङ्कालरक्तपुषि कङ्कादिपक्षिविषये
त्वं कामनामयसि किं कारणं हृदय पङ्कारिमेहि गिरिजाम् ।
शङ्काशिलानिशितटङ्कायमानपदसङ्काशमानसुमनो
झङ्कारिमानततिमङ्कानुपेतशशिसङ्काशिवक्त्रकमलाम् ॥६॥



कुम्बावतीसमविडम्बा गलेन नवतुम्बाभवीणसविधा
शं बाहुलेयशशिबिम्बाभिराममुखसम्बाधितस्तनभरा ।
अम्बा कुरङ्गमदजम्बाललरोचिरिह लम्बालका दिशतु मे
बिम्बाधरा विनतशम्बायुधादिनिकुरम्बा कदम्बविपिने ॥७॥



इन्धानकीरमणिबन्धा भवे हृदयबन्धावतीव रसिका
संधावती भुवनसन्धारणेऽप्यमृतसिन्धावुदारनिलया ।
गन्धानुभावमुहुरन्धालिपीतकचबन्धा समर्पयतु मे
शं धाम भानुमपि सन्धानमाशु पदसन्धानमप्यगसुता ॥८॥

# श्रीमच्छङ्कराचार्यविरचितम्

# अम्बाष्टकम्

चेटीभवन्निखिलखेटी कदम्बतरुवाटीषु नाकिपटली-
कोटीरचारुतरकोटीमणीकिरणकोटीकरम्बितपदा ।
पाटीरगन्धकुचशाटी कवित्वपरिपाटीमगाधिपसुता
घोटीकुलादधिकधाटीमुदारमुखवीटीरसेन तनुताम् ।।१।।

## श्रीकाशिकानन्दस्वामिकृता सारबोधिनी व्याख्या

दिव्यकाव्यकलामालातायिनीं ज्ञानदायिनीम् ।
भववैराग्यदां वन्देऽभयदां भववल्लभाम् ।।

अथ भगवान् शङ्कराचार्यः सर्वशक्तिसमन्वितां शक्तिस्वरूपिणीम् अम्बामैहिक-पारमार्थिक-सकलमङ्गलावासयेऽष्टकेन किल तुष्टाव । तत्र मङ्गलस्तवनाय काव्यकलां प्रथमं प्रार्थयति - चेटीत्यादि । अगाधिपसुता कवित्वपरिपाटीं मे तनुतामिति प्रथममन्वयः । अगाः पर्वतास्तेषामधिपो हिमालयस्तत्सुता हैमवती उमा ब्रह्मविद्यारूपिणी पार्वती । तस्या विशेषणानि चेटीत्यादीनि । चेटीभवन्त्यो - दासीभवन्त्यो निखिलाः खेट्यः । खे आकाशेऽटन्तीति खेट्यो

विद्याधरीगन्धर्वीप्रभृतयो यस्याः सा। हलदन्तात् सप्तम्या अलुक् । गन्धर्वीप्रभृतयः स्वयमचेट्योऽपि चेटीभवन्ति भगवत्याः । किट खिट त्रासे इत्यतः खेटीशब्दश्चेद् राक्षसीप्रभृतयो दुर्मदा अपि चेटीभवन्तीति । कदम्बेति । कदम्बवृक्षवाटिकासु भगवत्या बहुधा वासात्तत्रैवागता या नाकिपटली - देवसमुदायस्तस्य कोटीराणां किरीटानां चारुतरासु परमसुन्दररूपासु कोटीषु अग्रभागेषु वर्तमाना या मणयस्तासां किरणकोटीभिः - असंख्यकिरणैः करम्बितौ मिश्रौ पादौ यस्याः सा तथा । चारुतरपदं कोटीमणिविशेषणं वा । देवा यदा प्रणमन्ति तदा तदीयकिरीटमणिकिरणा निपतन्तो भगवत्याश्चरणौ नितरां शोभयन्तीति भावः । कोटिमणिप्रभृतयः स्त्रियामपि वर्तन्त इति कृदिकारादक्तिन इति सर्वत्र ङीष् । देव्यः नित्यं प्रणमन्तीति सर्वोर्ध्वत्वं सर्वातिशयित्वं च सूचितम् । पाटीरेति । पाटीरश्चन्दनस्तस्य गन्धो यत्र सा पाटीरगन्धा कुचशाटी कुचकञ्चुको यस्याः सा । कुचयोश्चन्दनलेपात् । किं च उदारमुखवीटी उदारा उत्तमा मुखे वीटी ताम्बूलवीटिका यस्याः सा । ताम्बूलवीट्या मुखशुद्धौ आशीःप्रदानवचनस्पष्टता स्यात् । सौन्दर्यविशेषो वा मुखस्य । एवंविधाऽगाधिपसुता हैमवती घोटीकुलादाधिकधाटीं घोटीनां तुरगीणां कुलाद् अधिका धाटी प्रपातो यस्याः सा तथा ताम् । कवित्वपरिपाटीं कवित्वानुक्रमं कवित्वपरम्परामिति यावत् । यथा घोटिका युद्धादौ धावमानाः क्रमिकतयाऽग्रेऽग्रे विसरन्ति तथा तादृशवेगेन

श्लोकाच्छ्लोकान्तरमित्येवं शीघ्रगत्या कवित्वपरम्परामाशुकविताम् इति यावत् रसेन शृङ्गारादिरससहितां तनुतां ममेति शेषः।१।

विद्याधरी आदि समस्तगगनचारिणीदेवियां दासी के रूप में जिन की सेवा करती हैं; अपने निवासस्थान कदम्बवन में आकर प्रणाम करते हुए इन्द्रादि देवताओं के किरीटों के सुन्दर किनारों पर लगे हुए आसंख्य मणियों की किरणों से जिन के चरण झिलमिल होते रहते हैं; जिन की चोली चन्दन की सुगन्धी से सुगन्धित होकर सेवकों की घ्राणेन्द्रिय को तर करती रहती है; दिंव्य ताम्बूल से शोभायमान जिन का मुख दर्शकों के नेत्रों को आकर्षित करता है, हिमालयपुत्री वे माता हमारी काव्यवाणी को ऐसी द्रुतगति प्रदान करें जैसे घोडियां दौडती हुइ आगे बढ रही हों, साथ ही उसे रसपूर्ण भी बनायें ।१।

The daughter of the Lord of Mountains, whom all the celestial ladies serve after becoming her maid-servants, whose feet are shining because of the innumerable rays issuing from the lovely jewels set in edges of the crowns of the multitude of gods, whose breast garment is scented with sandalwood, who is having the best beetle-roll in her mouth may impel the

tradition of poetic talent in such a way to have onslaught that is swifter than those of a group of female horses. (1)

कूलातिगामिभयतूलावलिज्वलनकीला निजस्तुतिविधा-
कोलाहलक्षपितकालाऽमरी कुशलकीलालपोषणनभाः ।
स्थूला कुचे जलदनीला कचे कलितलीला कदम्बविपिने
शूलायुधप्रणतिशीला विभातु हृदि शैलाधिराजतनया ।।२।।

भयनिवृत्तये कुशलादिप्राप्तये च हृदि मातुः स्फुरणं प्रार्थयति - कूलेति । शैलाधिराजतनयाअमरी मे हृदि विभात्वित्यन्वयः । कीदृशी ? तत्राह - कूलेत्यादि । कूलमतिगच्छति अतिक्रामति तादृशं कूलङ्कषं महद्भयं संसारलक्षणं यत् सैव तूलावलिः कार्पाससंमूहस्तस्य ज्वलने दाहने कीलेव कीला अग्निज्वाला । किं च निजेति । निजस्तुतेर्देवीस्तुतेर्याविधा विधानं तस्याः कोलाहलेन क्षपितो भक्तानां कालो मरणं मरणदुःखमिति यावत् यया सा तथा । अमरी अमरस्य मृत्युञ्जयस्य पत्नी । कुशलमैहिकं योगक्षेमलक्षणं पारत्रिकं मोक्षाख्यं च तदेव कीलालं जलं तस्य पोषणे । वर्षणे वर्धने च नभा इव नभा मेघः । नभो व्योम्नि नभा मेघे इति विश्वः । किं च स्थूला कुचे कुचावच्छेदेन; पीनपयोधरा साहित्यसङ्गीतक्षीरप्रचुरधाराप्रवाहिनी ।

कचे कचावच्छेदेन नीला जलदनीलाः जलदश्यामलाऽलका पश्यतां शीतलतादायिनी, कदम्बविपिने कंलितलीला । किं च शूलेति । शूलायुंधस्य शङ्करस्य प्रणतिः प्रणमनं शीलं यस्याः सा, न तु सतीवच्छङ्करे क्वचिदश्रद्दधाना सत्युन्नमनप्रयासा, एवंविधा शैलाधिराजतनया हिमालयतनया मम हृदि विभातु विशेषेण भातु नित्यं स्फुरतु ।।२।।

श्रीमाता के सामने महाभय भी रूई के बराबर और उसे जलाने में स्वयं अग्निज्वाला के समान है । उनकी स्तुति का कोलाहलात्मक शब्द स्तोता के मृत्युक्लेश को समाप्त करता है । वे माता इह-पर लोक मङ्गलरूपी जल बरसानेवाली मेघमाला है, स्थूल स्तनों से (उनके संगीतात्मक दुग्ध धारा से जगत का पोषण करती हुई) शोभा सम्पन्ना है, मेघ सदृश श्यामल बालों से सनोहर स्वरूपा है, कदम्ब वन में लीलातत्पर हैं, शङ्कर भगवान के अनुकूल वर्तिनी है । वे शैलपुत्री पार्वती मेरे हृदय में नित्य विराजमान हो ।।२।।

The daughter of the overlord of mountains, wife of immortal (मृत्युञ्जय) who is like a flame in burning the heap of cotton in the form of the great fear, who has reduced the pangs of death of those who are engaged in the loud recitation

of her own praise, who is like a cloud in increasing the water of well-being, massive in breasts (which ooze out the milk of literature and music in profuse quantity), dark like clouds in respect of hair, who has sported in the forest of Kadamba trees, who is inclined to offer salute to Siva who wields the weapon called SHULA (शूल) may shine in my heart. (2)

यत्राशयो लगति तत्रागजा वसतु कुत्रापि निस्तुलशुका
सुत्रामकालमुखसत्राशनप्रकरसुत्राणकारिचरणा ।
छत्राऽनिलातिरयपत्राऽभिरामगुणमित्राऽमरीसमवधूः
कुत्रासहन्मणिविचित्राकृतिः स्फुरितपुत्रादिदानिपुणा ।।३।।

ऐहिकामुष्मिकसुखप्राप्तये सार्वदिकं सार्वत्रिकं भगवत्याः स्मरणं प्रार्थयति । यत्रेति । यत्र कुत्रापीति सम्बन्धः । यत्र कुत्रापि ममाशयश्चित्तं लगति तत्रैवागजा पार्वती वसतु इत्यन्वयः । यत्र यत्र मनो याति तत्र तत्र समाधयः इति न्यायेन सर्वेषु विषयेषु भगवत्या दर्शनं भवत्वित्यभिप्रायः । निस्तुलेत्यादि विशेषणानि । निस्तुलोऽनुपमः शुको हस्ते यस्याः सा । तथा च सुभगोदये

आचार्योक्तिः - "भवानि श्रीहस्तैर्वहसि फणिपाशं सृणिमथो धनुःपौण्ड्रं पौष्पं शरमथ जपस्त्रक्शुकवरौ" इति । शुकवर एव निस्तुलशुकशब्देन चोच्यते । निस्तुलानि शुकानि रत्नानि यस्याः सेति वा । सुत्रामेति । सुत्रामा इन्द्रः । कालः कालवर्णो विष्णुः । "कालो मृत्यौ महाकाले समये यमकृष्णयोः" इति कोशे यमसहपठितः कृष्णो द्रव्यरूप एव । तन्मुखाः एतत्प्रभृतयो ये सत्राशना यज्ञाशना देवास्तेषां प्रकरस्य समुदायस्य सुत्राणम् असुरनिहननेन यज्ञादि प्रवर्तनेन च रक्षणं तदेव कर्त्तुं शीलं ययोस्तादृशौ चरणौ यस्याः सा । चरणमाचरणं कर्म वा देवसुत्राणकारि यस्याः सेति वा । छत्रेति । छत्रमस्या अस्तीत्यर्श आद्यजन्तः । छत्रचामरादिमतीत्यर्थः । अनिलातिरयपत्रा - वायोरप्यधिकवेगशालि पत्रं वाहनं सिंहात्मकं यस्याः सा । "पत्रं वाहनपक्षयोः" इत्यमरः । अभिरामेति । अभिरामा मनोहरा गुणा एव मित्राणि यस्याः सा । अमरीति । अमर्यः अमराणां शक्तयः समाः सर्वा वध्वो ब्राह्म्याद्याः शक्तयो यस्याः सा । संमशब्दः सर्वपर्यायः । कुत्रासहृदिति । कुः पृथिवी । तत्रस्था अपि कुशब्दार्थः । तान् त्रासयन्तीति कुत्रासा दैत्यास्तान् हरति संहरतीति कुत्रासहृत् । अनुनासिकपरत्वात्तकारस्य नत्वम् । दैत्यसंहारकारिण्यपि न रौद्राकारा । किन्तु मनोहरा । कथं ? मणिविचित्राकृतिः । मणिभिर्विशेषेण चित्रा आश्चर्यकारिणी आकृतिर्यस्याः सा । "दुर्वृत्तवृत्तशमनं तव देवि शीलं रूपं तथैतदविचिन्त्यमतुल्यमन्यैरि"ति

दर्शनात् । कुत्रासहन्मणिविचित्रेति पाठश्चिन्त्यः । कुत्रासं हन्तीति विग्रहे नलोपापत्तेः । कुत्रान् पर्वतान् न सहत इति तथाभूतस्येन्द्रस्य मणिभिर्विचित्रेत्यपि सहतेरात्मनेपदित्वान्न युज्यते । स्फुरितेति । स्फुरितानां स्फूर्तियुक्तानां पुत्रपौत्रादीनां दाने निपुणा ।।३।।

मेरा मन जहाँ कहीं भी लगे वहीं माता पार्वती निवास करें (समस्त जगत को मैं मातास्वरूप ही देखूं) । वे माता इन्द्रयमादि समस्त देव समूह की रक्षा करती है (अतः मेरी भी रक्षा अवश्यमेव करेगी) वे छत्रधारिणी (एकछत्राधिपति सर्वेश्वरी) है । वायुवेगवाले वाहन (सिंह) पर स्थित है । मनोहर गुणों से संपन्न हैं । ब्राह्मी आदि अमरशक्ति सहित हैं । त्रास नाशिनी हैं । मणियों की सजावट से सुन्दर आकृतियुक्त है । योग्य पुत्रपौत्रादि प्रदान करनेवाली है ।३।

Wherever my heart is fixed may there reside the Daughter of Mountain .who holds an inimitable parrot (or jewels) in her hand, whose feet offer protection to the multitude of sacrifice-enjoying gods headed by Indra and Vishnu, who is possessed of umbrella, chowrie etc., whose vehicle (lion) is swifter than the wind, who has friends in the form of attractive

qualities, possessed of all the powers who are wives of gods, who destroys the demons causing fear to the earth, whose form is wonderful on account of the jewels (worn by her), who is clever in bestowing inspired sons and grandsons. (3)

Note:- अमरीसमवधू: - AMARI-s are the vital powers (शक्ति) of gods and possess all the attributes of the gods concerned, e.g. इन्द्र has got the power called ऐन्द्री who rides on the elephant ऐरावत, holds a वज्र in her hand etc. Similarly Brahmadeva has ब्राह्मी power corresponding to him. She has got four faces etc. These powers are, here, imagined to be the wives of the gods.

द्वैपायनप्रभृतिशापायुधत्रिदिवसोपानधूलिचरणा
पापापहस्वमनुजापानुलीनजनतापापनोदनिपुणा ।
नीपालया सुरभिधूपालका दुरितकूपादुदञ्चयतु मां
रूपाधिका शिखरिभूपालवंशमणिदीपायिता भगवती ।।४।।

दुरितनाशं प्रार्थयति द्वैपायनेति । भगवती मां दुरितकूपादुदञ्चयतु इत्यन्वयः । का सा भगवती ? शिखरीति । शिखरिभूपालस्य पर्वतराजस्य हिमवतो यो वंशस्तस्य मणिदीपायिता । मणिरूपो दीपो न निर्वाति । तादृशमणिदीपवद् हिमवद्वंशमेषा नित्यं प्रकाशयतीति भावः । द्वैपायनेति । द्वैपायनो व्यासः । तत्प्रभृतयो ये शापायुधाः । शाप एव दुष्टनिग्रहे आयुधं येषां ते शापायुधास्तपस्विनः एवं तर्हि मनोविकृतेस्तेषामुद्धारो न स्यादिति चेन्न तेषां त्रिदिवसोपाना स्वर्गसोपाना उद्धारहेतुभूता इति यावत् भगवत्याश्चरणधूलय एव । एवंविधा धूलयो ययोस्तादृशौ चरणौ यस्याः सा । देव्याश्चरणमेवोर्ध्वक्रमणकारणमिति तत्वम् । तापेति । तापानाध्यात्मिकादीनपहन्तीति तथाभूतस्य स्वमनोः स्वीयमन्त्रस्य नवार्णपञ्चदशार्णादेर्जपेजपेऽनुलीना निमग्ना ये जना मन्त्रजपपरास्तेषां पापामनोदने नाशने निपुणा । नीपेति । कदम्बवनवासिनी । सुरभीति । सौरभयुक्तधूपसुगन्धितकेशा । रूपेति । परमसुन्दरीत्यर्थः । एवंविधा भगवती मां दुरितकूपादुत्थापयतु ।।४।।

*भगवती कदम्बवनवासिनी है । सुगन्धित धूप से सौरभित केशवाली है । रूपवती है । पर्वतराज हिमालय के वंश को उज्ज्वल बताने वाला मणिदीप है । व्यासादि शापायुध (शाप को ही अपना*

अस्त्र बनाये हुए) महामुनियों के स्वर्गारोहण के लिये भगवती की चरणधूल ही सोपान है। वे अपने पापहारी मन्त्र जप करने में तन्मय भक्तों के ताप को नष्ट करती है। वे मुझे पाप के गर्त से उबारें ।४।

The goddess who has feet over which there is dust which forms the staircase to heaven for Dvaipayana Vyasa and others whose weapon consists of power to curse, who is expert at removing the misery of people who are dedicated to the muttering of her own mantra (मन्त्र) which sets aside sins, who has her dwelling place among Kadamba trees, whose hair is rendered fragrant with incense, who excels in beauty, who acts as the jewel-lamp of the lineage of the Lord of Mountains may lift me up from the well of sins.(4)

याऽऽलीभिरात्मतनुताली सकृत् प्रियकपालीषु खेलति भय
व्यालीनकुल्यसितचूलीभरा चरणधूलीलसन्मुनिवरा ।
बालीभृति श्रवसि तालीदलं वहति याऽलीकशोभितिलका
साऽलीकरोतु मम काली मनः स्वपदनालीकसेवनविधौ ।।५।।

नित्यानुसन्धानं प्रार्थयति येति । सा काली स्वपदनालीकसेवनविधौ मम मनः अलीकरोतु । सा का ? या काली आलीभिः सखीभिः सकृत् सार्धम् आत्मतनुताली आत्मनः स्वस्य तनुः स्वल्पा विरला अल्पशब्दा च ताली हस्तस्फोटनं यस्याः सा । कुतोऽल्पत्वम् ? प्रियकपालीषु प्रियस्य शङ्करस्य कपालीषु मुण्डमालागतकपालीषु मध्ये मध्ये वादनं कुर्वती खेलति । "तनुर्वपुः त्वचोः । विरलेऽल्पे कृशे" इति हैमः । मुण्डमालाकपालीवादने अधिकानन्दसत्त्वाद्विरलमेवालीभिः सह तालीवादनमिति भावः । कपालीषु खेलने भयं स्यादिति चेन्न । सर्वभयहारित्वादित्याह भयेति । भयं व्यालीव सर्पिणीव तन्नाशने स्वयं नकुलीव नकुली । किं च असितचूलीभरा - श्यामकुन्तलभारा । किं च स्वीयचरणधूलीषु लसन्तो लुठन्तो मुनिवरा यस्याः सा । किं च या बालीभृति कर्णोर्ध्वालङ्कारात्मकबालीं बिभ्रति श्रवसि श्रोत्रे तालीदलं - ताडङ्कपत्रम् । डलयोरभेदात्ताली ताडी । ताडवदङ्क्यमानत्वाल्लक्ष्यमाणत्वाद्धिताडङ्कः प्रसिद्धः । तदीयदलं वहति । किं च अलीकेति । अलीकं ललाटं शोभयति तच्छीलं ललाटे शोभितुं शीलं यस्येति वा । तादृशं तिलकं यस्याः सा ललाटशोभितिलका । एवंविधा काली स्वपदपद्मसेवाकरणे मदीयं मनोऽलीकरोतु भ्रमरीकरोतु । यथा भ्रमरः पद्मे रसास्वादनं

कुर्वंस्ततो नापसरति तथा मम मनो भगवतीपदयोर्नित्यमानन्दं लभतामित्यभिप्रायः ।।५।।

देवी शिवा कभी नृत्य करतीं हैं तो अपनी सहोलियों के साथ कुछ ताली बजातीं हैं फिर प्रियतम शङ्कर के गले में पडी मुण्डमाला को बजाने लगतीं है जिस में उन्हें भय नहीं । बल्की भयरूपी सांपिन के लिये वे नेवली जैसी हैं । सब के भय को दूर करती हैं । वे सांवले सघन केशों से अपने शान्त स्वभाव को प्रगट करती हैं । उन की चरणधूलि में बडे-बडे ऋषि-मुनि लोटते हैं । उनके कानों में कर्णभूषण और ताटङ्क शोभा पा रहे हैं । तथा ललाट पर तिलक चमक रहा है । वे काली भगवती अपने चरण कमलों के सेवन में मेरे मन को भ्रमररूप कर दें तन्मय बना दें ।५।

Goddes Kali who plays along with her friends with the skulls worn by her lover with gentle claps, who is like a female mongoose destroying the female serpent in the form of fear, who has thick black hair, in the dust of whose feet the best among sages are rolling, who wears the ornament *BALI (बाली) carries the palmleaf on her ear, having a TILAKA mark which decorates

forehead may turn my mind into a bee doing the act of serving her lotus-like feet. (5)

Note: - वाली - an ornament worn on the upper side of the ear.

न्यङ्काकरे वपुषि कङ्कालरक्तपुषि कङ्कादिपक्षिविषये
त्वं कामनामयसि किं कारणं हृदय पङ्कारिमेहि गिरिजाम् ।
शङ्काशिलानिशितटङ्कायमानपदसङ्काशमानसुमनो
झङ्कारिमानततिमङ्कानुपेतशशिसङ्काशिवक्त्रकमलाम् ।।६।।

भगवतीस्मरणाय स्वं हृदयं सम्बोधयति - न्यङ्काकर इति । हे हृदय ! वपुषि स्वपरशरीरे कामनां किं कारणमयसि, त्वं गिरिजामेहीत्यन्वयः । कीदृशे वपुषि ? न्यङ्काकरे कृमिजालसङ्कुले । न्यक्कारस्तिरस्कारार्थकः । निपूर्वादञ्चतेर्घप्रत्यये न्यङ्काशब्दः । येन शरीरं न्यक्कार्यं भवति । तादृशं मलमूत्रादिकं वा न्यङ्कस्तदाकारे । किं च कङ्कालरक्तपुषि । कङ्कालोऽस्थिपिञ्जरः स रक्तादिश्च पुष्यतेऽत्रेति तैः पुष्यते वा । कङ्कादिरक्तपुषीति पाठान्तरम् । कङ्कादिपक्षिविषये कङ्कगृध्रादिभक्ष्ये किं कारणं हे हृदय किं कारणं त्वं कामनामयसि प्राप्नोषि । इट-किट-कटी-गतावित्यत्र प्रश्लिष्टस्यायतेरिदं रूपम् । स्त्र्यादिशरीरे कुतः कामनामेषि स्वशरीरे च कुतो मुह्यसीत्यर्थः । किं

तर्हि कार्यम् ? गिरिजामम्बामेहि प्राप्नुहि । कीदृशम् ? पङ्कारिं कलङ्कनाशिनीम् । तदीयं चिन्मयं शरीरं पङ्कनाशनमेव न तु पङ्कयुतमिति भावः । किं च शङ्केति । शङ्का संशयः सा शिलेव दुर्भेदा तद्भेदने निशितस्तीक्ष्णो यष्टङ्कः । अश्मदारणस्तद्वदाचरत इति तथाभूतौ पदौ । अर्थाद् भगवत्या एव । तत्र सङ्काशमाना ये सुमनसो देवा विद्वांसः "विद्वांसो वै देवा" इति श्रुतेः तेषु झङ्कर्तुं शीलं यस्यास्तादृशी मानततिः प्रमाणसन्ततिः श्रुतिसमुदायलक्षणा यस्याः सा । "छिद्यन्ते सर्व-संशया" इति श्रुतेः । भगवत्याः पदरूपे तुरीयाख्ये स्थितानां संशयरहितानां विदुषां मुखतो निःसृत्य झंकुर्वाणा श्रुतिसंततिरेव भगवत्यास्तत्वप्रमापिकेति भावः । अत एव पदशब्दस्य परमार्थपदार्थकत्वेनैकवचनेनापि विग्रहो भवितुमर्हति । एवंविधाः सुमनसः प्रत्यक्षतया परं पदं प्रतिपादयन्ति पञ्चावयवादिभिः उपमिन्वन्ति चेति मानततिपदेन ब्रह्मप्रमापकसकलप्रमाणान्यपि धर्तुं शक्यन्ते । तादृशैः सुमनोभिर्झंक्रियमाणा प्रत्यक्षादिमानततिरेव भगवतीत्यपि व्याख्यान्तरम् । विद्यारूपत्वाद् भगवत्याः । अङ्कानुपेतेति । अङ्कः कलङ्कस्तमनुपेतो यः शशी तत्संकाशं तत्सदृशं वक्त्रकमलं यस्याः सा । अङ्करहितशशीत्यसंभावितोत्प्रेक्षा पतत्पतङ्गप्रतिमः तपोनिधिरितिवत् । चन्द्रकमलयोर्विरुद्धयोरत्रैकत्वोक्तिः । मायाकलङ्करहितपरमानन्दकरप्रकाशैकस्वरूपेति अभिव्यङ्ग्यार्थः ।।६।।

हे हृदय । यह शरीर तो तुच्छ अधम तत्वों का खान है, अस्थिपञ्जर रक्त मांसादि का पोषक या उन से पोषित है । चील गिद्ध आदि पक्षियों का भक्ष्य है । इस में तुम क्यों आसक्त हो रहे हो ? सकल दोष हारिणी गिरिसुता अम्बा के चरणों में क्यों नहीं लग रहे हो । उन्हीं की शरण में जाओ । संशयरूपी शिला तोडने में तीखे घन सदृश, अपने पद में तन्मय होकर विराजमान विद्वानों के मुख से गूंजने वाली विद्या वे ही भगवती हैं । उन का मुख मानो निष्कलङ्क चन्द्रमा ही है । परम आह्लादकारी है ।६।

My dear heart why do you have affection for the body which is store-house of despisable things, in whom the skeleton and blood grow and which is an object of birds like vultures (after death) ? Approach Girija, who is an enemy of impurities, who acts like "sharp chisel to break the stone in the form of *DOUBT (शंका) who is the knowledge in the form of the authoritative row of SRUTI-s which are humming in the mouths of learned men attached to her feet, whose lotus-like face imitates the moon

devoid of its spot. (6)

Note:- शङ्कः - that doubt which comes in the way of acquiring perfect knowledge of Brahman, leading to emancipation.

कुम्बावतीसमविडम्बा गलेन नवतुम्बाभवीणसविधा
शं बाहुलेयशशिबिम्बाभिराममुखसम्बाधितस्तनभरा ।
अम्बा कुरङ्गमदजम्बारलरोचिरिह लम्बालका दिशतु मे
बिम्बाधरा विनतशम्बायुधादिनिकुरम्बा कदम्बविपिने ॥७॥

इहपरलोकमाङ्गल्यं प्रार्थयति - कुम्बावतीति । अम्बा शं तनोत्वित्यन्वयः । कम्बावतीति पाठे कम्बयतीति कम्बुः शङ्खः । भावप्रत्यये कम्बा तद्वती शंखिनी तत्समविडम्बा गलेन । कम्बुकण्ठीत्यर्थः । कुम्बावतीति पाठे कुबि छादने । तस्मिन्नुदीचीनकुम्बां शम्यां निदधातिति तैत्तिरीये । शम्या यष्टिविशेषः शम्याक्षेपे प्रसिद्धः । वस्त्राच्छादितयष्टिः कुम्बावती । तत्समविडम्बा आगलेन शरीरेण । तृतीयासंसम्योर्बहुलमिति तृतीया । गलपर्यन्तमाच्छादितशरीरयष्टिरित्यर्थः। नवेति । तुम्बाऽलाबुरिति शब्दरत्नावली । तुम्बीशब्दोऽपि तथा । अत्र प्रासानुरोधेन तुम्बेत्येव पाठः । नवया तुम्बयाऽऽभातीति नवतुम्बाभा वीणा यत्र तद्

नवतुम्बाभवीणं तादृशं सविधं पार्श्वं पार्श्वभागो यस्याः सा । पार्श्ववर्त्तिवीणेत्यर्थः । गलेनेत्यस्योत्तरान्वसित्वे समाना विधा प्रकारो ऽस्याः सा सविधा । नवतुम्बाभवीणैव सविधा समानप्रकारा गलेन यस्याः सा तथा । मधुरस्वरेत्यर्थः । न च वीणाशब्दस्य भाषितपुंस्कत्वविरहात् पुंवद्भावो न भवतीति वाच्यम् । उणादयो बहुलमिति व्युत्पत्तिपक्षाश्रयणे भाषितपुंस्कत्वोपपत्तेः । यद्वा पूर्ववदेव समासः । गलेनैव नवतुम्बाभवीणापार्श्वा न तु साक्षाद् वीणया पार्श्ववीणेत्यर्थः । वीणामधुरस्वरगलेति तात्पर्यम् । बाहुलेयेति । बाहुलेयः कार्त्तिकिकः । कार्त्तिकमासोऽपि शरदन्तर्गतः । तथा च शरत्पूर्णिमाचन्द्रबिम्बवदभिरामेणमुखेन सम्बाधितौ स्तनभरौ यस्याः सा मुखप्रकाशाभिभूतस्तनकान्तिरित्यर्थः । कुरङ्गेति । कुरङ्गमदो मृगमदः कस्तूरी । कस्तूरीपङ्केन रोचिः शोभा यस्याः सा । लम्बालका - दीर्घकेशयुक्ता । बिम्बाधरा - बिम्बफलोपमाधरोष्ठा । विनतेत्यादि । कदम्बविपिने विनतं प्रणतं शम्बायुध इन्द्रस्तदादीनाम् इन्द्रविष्णुप्रभृतीनां देवानां निकुरम्बं वृन्दं यस्याः सा अम्बा मे मह्यं शं मङ्गलं दिशतु प्रददातु ।।७।।

*शंख के समान मनोहर जिन का गला है या गलेतक सड़ियों से जो आवृत है, नवीन तुंबी से शोभायमान वीणा जिन के बगल में है या जिन का कण्ठ वैसी वीणा के स्वर के बराबर सुन्दर है, शरत*

पूर्णिमा के चन्द्र के समान सुन्दर मुख की आभा वक्षःस्थल की कान्ति को भी फीकी करती है, ललाट कस्तूरीतिलक से मनोहर है, बाल लम्बे हैं, ओष्ठ बिम्बाफल के समान अरुण है, जो कदम्बवन में इन्द्रादिदेवताओं से नमस्कृत है वे अम्बा हमें मङ्गल प्रदान करें ।।७।।

Goddess Amba whose neck is lovely like a conch or who imitates a (slender) stick covered with garment upto the neck, who is holding a beautiful lute fitted with a new pumpkin or whose voice is as attractive as a lute fitted with a new pumpkin, whose face which is as beautiful as a the autumnal moon over-powers the (beauty of) massive breasts, who is lovely because of the mark on the forehead made with musk, who is long-haired (and) having lips like ripe Bimba fruit, who is saluted in the Kadamba forest by a group of gods headed by Indra may direct me towards auspiciousness. (7)

इन्धानकीरमणिबन्धा भवे हृदयबन्धावतीव रसिका
संधावती भुवनसन्धारणेऽप्यमृतसिन्धावुदारनिलया ।
गन्धानुभावमुहुरन्धालिवीतकचबन्धा समर्पयतु मे
शं धाम भानुमपि सन्धानमाशु पदसन्धानमप्यगसुता ।।८।।

परममङ्गलं तत्साधनं च प्रार्थयति - इन्धानेति । अगसुता मे शं धाम पदसन्धानमपि समर्पयतु इत्यन्वयः । अगसुता पर्वतपुत्री । कीदृशी ? इन्धानेति । इन्धानः दीप्यमानः कीरसदृश आकृतितो मणिबन्धः प्रकोष्ठो यस्याः सा । धृतशङ्खादिर्हस्तः कूर्परान् मणिबन्धमुष्टिपर्यन्तं कीरवद् भातीति । इन्धानस्य कीरमणेर्हरितमणेः मरकतस्य बन्धो यस्या इति वा । किं च हृदयबन्धौ हृदयं बध्नातीति हृदयप्रिये भवे शङ्करेऽतीव रसिका । किं च भुवनसन्धारणे जगद्धारणे सन्धावती प्रतिज्ञावती । तथापि अमृतसिन्धौ सुधासमुद्रे उदारनिलया उदारः उत्तमो निलयो वासस्थानं यस्याः । भुवनधारणार्थं व्यापकस्वरूपापि सुधासमुद्रे विशेषेणाभिव्यज्यते । किं च गन्धेति । पारिजातादिकुसुमगन्धस्यानुभावेन आघ्राणेन मुहुरत्यन्तमन्धीभूताः तन्मयतां गता येऽलयो भ्रमरास्तैर्वीतो व्याप्तः कचबन्धः केशबन्धो

यस्याः सा । भ्रमरव्याप्तसुगन्धिपुष्पहारभूषितकचबन्धेत्यर्थः। सा मे शं धाम मङ्गलैकरसं मोक्षाख्यं धाम समर्पयतु प्रयच्छतु । कीदृशम् ? भानुमपि रुन्धानम् । मुख्यत्वाद्भानोर्ग्रहणम् । न तत्र सूर्यो भाति, न तद्भासयते सूर्य इत्यादि श्रुतिस्मृतिभ्यां यत्र भान्वादेर्गतिः समाप्तेत्यर्थः । अपि-अपि च यथोक्तधामप्राप्तिसाधनं पदसन्धानं श्रीदेवीचरणध्यानमाशु शीघ्रमेव मे समर्पयतु प्रददातु । रुन्धानमित्यस्य स्थाने सन्धानमिति पाठे शं धाम मोक्षाख्यं समर्पयतु, तत्सन्धानं तत्प्रयोजकं भानुमपि ज्ञानकिरणमपि समर्पयतु, तत्रापि साधनं स्वपदसन्धानमपि प्रयच्छतु इति योजना । शम् - इहलोककल्याणं, धाम स्वधाम, तत्सन्धायकं भानुमपि, पदसन्धानमपि प्रयच्छत्विति वा ।।८।।

*तोते के सदृश आकृतिवाले सुन्दर मणिबन्ध से युक्त, अपने हृदयबन्धु शिव में अत्यन्त रसिक, लोकरक्षणार्थ कृतप्रतिज्ञ, फिर भी सुधासिन्धु वासिनी वे भगवती जिन के पारिजातादिपुष्पवेणी से सुगन्धित केशों में मोहान्ध भ्रमर व्याप्त हो गये हैं, इह लोक में कल्याण, परलोक में अपना दिव्य धाम, तदर्थ ज्ञान प्रकाश और सर्वमूल निजचरणध्यान मुझे प्रदान करें ।८।*

The Daughter of Mountain with the forearm having the lovely shape like that of a parrot, who takes great relish in SIVA who is dear to her heart, who has taken the oath of supporting the world but even then has taken up her great abode in the ocean of nectar, whose knot of hair is full of bees that are blind-folded by smelling flowers which are worn there (hair), may grant me well-being in this world, her own divine abode in the next world, the lustre of knowledge and the meditation of her feet which is paving the way to all these boons. (8)

अम्बाष्टकस्य नष्टापि प्राग्व्याख्या पुनरुद्धृता ।
काशिकानन्दगिरिणा श्रीमता यतिनाऽधुना ॥

॥ इति द्वादशदर्शनकाननकेसरिणा श्रीस्वामिकाशिकानन्दगिरिणा कृताऽम्बाष्टकव्याख्या समाप्ता ॥

पाण्डित्य, पात्रता और गुणवत्तता युक्त ग्रन्थ, कम्प्युटर द्वारा सुन्दर छपाई
मूल संस्कृतपाठ की संस्कृत-व्याख्या और हिन्दी तथा अँग्रेजी अनुवाद सहित

प्रथम पुष्प : महिषासुर-मर्दिनी-स्तोत्रम् ........................ रु. १०

द्वितीय पुष्प : अद्वैत-विजय-वैजयन्ती ........................ रु. १०

तृतीय पुष्प : अम्बाष्टक-स्तोत्रम् ................ रु. ८

चतुर्थ पुष्प : (चरण-शृङ्ग-रहित) नटराजस्तोत्रम् ................ रु. १०

पञ्चम पुष्प : शिव-ताण्डव-स्तोत्रम् (प्रेस में ) .................. रु. १०

Our Publications

Books of scholarship, merit and quality.

Elegant Print through Computer

Commentary in Sanskrit and meaning in Hindi & English

Book 1 - Mahishasura-mardini-stotra ............. Rs.10

Book 2 - Advaita-vijaya-vaijayanti ............. Rs.10

Book 3 - Ambashtakam ............. Rs. 8

Book 4 - (Charana-srnga-rahitam) Nataraja Stotram Rs.10

Book 5 - Siva-tandava-stotram (In Press) ......... Rs.10

## कृतज्ञतावचनम्

अस्याः पुस्तिकायाः मुद्रणं राष्ट्रीय-सॉफ्टवेयर-प्रौद्योगिकी-केन्द्रम् (गुल्मोहर-क्रास-मार्गसं. ९, जुहू, बम्बई - ४०००४९) इति संस्थया प्रदत्तायाः 'विविधा' प्रक्रियासामग्र्याः सहाय्येन कृतम् । तस्याम् उपयोजितानाम् अक्षरमातृकारूपाणां विकसनेन तेषाम् अस्मभ्यम् उपपादनेन च राष्ट्रीय-सॉफ्टवेयर-प्रौद्योगिकी-केन्द्रम्इति संस्थायाः डॉ.एस.पी.मुदुर-महाभागेन सुरेशः के-महाभागेन च उपकृताः वयम् इति अगाधां कृतज्ञतां प्रबलं गुणग्राहकत्वं च प्रकटयामः।

डॉ. अ. सदानन्दन्,

उपाध्यक्षः, भारती-संस्कृत-विद्या-निकेतनम्

## Acknowledgement

This Book has been published with the help of the Computer Software 'VIVIDHA' supplied by National Centre for Software Technology, Gulmohar Cross Road No.9, Juhu, Bombay 400049. Our indebtedness and high appreciation are due to Dr.S.P.Mudur and Shri Suresh K.of NCST (National Centre for Software Technology) who helped us by developing & supplying different types of fonts used in this Publication.

Dr.A.Sadanandan, Vice-President, B.S.V.N.

प्राप्तिस्थानानि :

१) भारती-संस्कृत-विद्या-निकेतनम्
१२, शङ्कर-कुञ्जः, हिमालय सोसायटी समीपम्, असल्फा-गोविन्दनगरम्, घाटकोपरः, मुम्बापुरी-४०००८४

२) आनन्दवन-आश्रमः
४१६-अ, स्वामी - विवेकानन्द- मार्गः, कान्दिवली, मुम्बापुरी-४०००६७.

३) पुस्तक भारती
भारतीय विद्या भवन बिल्डिंग, क. मु. मार्ग, मुम्बापुरी-४००००७.

Available at :-

1) Bharati-Samskrta-Vidya-Niketanam
12 Shankar Kunj, Near Himalaya Housing Society
Asalfa-Govind Nagar, Ghatkopar Bombay 400084.

2) Ananda-van Ashram
416-A, Swami Vivekananda Road, Kandivli, Bombay-400067.

3) Pustak Bharati
Bharatiya Vidya Bhavan Building, K. M. Marg, Bombay-400007.